उपरितनेन तु पादत्रयेण तत्साधयिष्यते । यथाऽऽह—

"इति प्रमाणत्वमिदं प्रसिद्ध-
मुक्त्वेह धर्मं प्रति चोदनायाः ।
अतः परं तु प्रविभज्य वेदं
त्रेधा ततो वक्ष्यति तस्य योर्थः॥" (श्लो.वा.वे.)

इति पदवाक्यप्रमाणपारावारपारीणमीमांसासाम्राज्यधुरन्धर-
महामहोपाध्यायविद्वद्वरश्रीमत्पार्थसारथिमिश्रप्रणीतायाः
शास्त्रदीपिकायाः प्रथमाध्यायस्य
प्रथमः पादः समाप्तः ।

---

नेत्याह । उपरितनेनेति । अस्मिन्नर्थे सम्मतिं दर्शयति । यथा-हेति । अतः परमित्यनेनैतदाह नेह प्रमाणलक्षणं समाप्तम् अर्थवादादिप्रामाण्याप्रतिपादनात् तेनाऽत्र सिद्धेऽपि चोदनाप्रामाण्ये तत्स्मरणं पादत्रयेण विध्यर्थवादमन्त्रात्मना वेदं त्रेधा विभज्य ततः स्तुत्यादिप्रयोजनप्रतिपादनं न तत्तद्वेदस्य धर्मं प्रति प्रामाण्यं प्रतिपादयिष्यत इति ।

नानाग्रन्थस्थितं सर्वं प्रमेयं फक्किकाश्च ताः ।
सङ्क्षिप्य लिखिता नात्र कल्पितं लिखितं मया ॥
येषामादर एव नास्ति विदुषां शास्त्रे न तेषामयं
ग्रन्थः क्वाऽप्युपयुज्यते जडधियां तन्त्रान्तराभ्यासिनाम् ।
येषां धर्मविचारणे सुकृतिनां श्रद्धादरौ तत्कृते
ग्रन्थोऽयं रचितो गभीरमनसां शास्त्रार्थकल्पद्रुमः ॥

इति श्रीमत्पराशरगोत्रसकलशास्त्रविशारदमाधवात्मजराम-कृष्णभट्टविरचितायां शास्त्रदीपिकाटीकायां युक्तिस्नेहप्रपूरण्यां सिद्धान्तचन्द्रिकाख्यायां प्रथमाध्यायस्य प्रथमः पादः समाप्तः ।

